क०
१

श्रीगणेशायनमः नरनारायणौनत्वाप्राचीनाचार्यवर्त्मना कर्णपर्वार्थविद्योतीभावदीपोविनन्यते १ ननुविराटादिपर्वसुन्नष्टपतात्पर्यक्रमेणार्थत्रुखानामर्थः सेवयानीत्या कपटद्यूर्वकेणाकुलरहृवधेनन्रुशंसान्नूकर्वकेणामहागुरुवधेनच सिद्धतीत्युक्तंतावतैवार्थ निरूपणांसमासंघ्यातः परंकालमोक्षावेवनिरूपणीयाविति कर्णपर्वादित्रयंनारंभणीय मितिचेत्सत्यंयथाधर्मार्थौनिरूपितौएवंधर्माभासोर्थाभास च निरूपणीयः परिहाराय एवमधर्मानर्थाच्चधर्माभासानर्थाभासौचनिरूपणीयौहानायच नत्वर्थमुत्तरग्रंथः

श्रीगणेशायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमं देवींसरस्वतींचैवततोजयमुदीरयेत १ वैशंपायनउवाच ततोद्रोणे हतेराजन्दुर्योधनमुखान्नृपाः भृशमुद्विग्नमनसोद्रोणपुत्रमुपागमन २ ॥श्रीरामजीसहाय॥ ॥ ॥ ॥

काममोक्षयोःप्रागावश्यकः तत्रचोरम्यः कांश्चिदिकमार्गमुपदिशन्तः सत्यवादिनः सत्यवदनंधर्माभासः स्वंचविद्यापीप्राणचक्षुषंराकृसंघ्नतोव्याधस्याहिंस्रत्वमधर्माभासः तथाशोकहेतनाकुलहृये णाश्वत्थामो थीर्थाभासः ससानांहननमधर्मः तत्कृतो भूत्वाप्नोतिभवोनर्थः शरणागतस्यसैनिकत्राणार्थमन्यायेनापिकृतोब्रह्मवधोनइतरब्रह्मवधवदनर्थः अपितुनर्थाभासएव न तेन ब्रह्महाभवेदित्याननापिवधेदोषाभावस्मरणात्इत्येषामर्थानांनिरूपणार्थं नरः संहर्मः आख्यापिकानुसरणप्रतियत्यर्था तस्मादिदमपिपर्वत्रयंआवश्यकमेवततोद्रोणेहतेराजन्नित्ति २

८१

राम०
१

कश्मलाभिहतौजसः तीव्रशोकाभिघातजमोहेन निरस्तसामर्थ्याः शारद्वतीसुतं द्रौणिं ३ समाश्वस्य सावधानीभूताः रात्र्यागमे प्रदोषकाले ४ पृथ्वीशाः राजानः क्षयं भूतं भाविनं च चिंतयंतः पर
मसंतः ८ क्लेशान् कचग्रहणादीन् स्मरणादारात्रिः ९ आवश्यकं नित्यकृत्यं १० योगं सन्नहनं ११ निष्कैः सुवर्णहारैः महाधनैः बहुमूल्यैः [illegible]मानं स्तूयमानं सूताः वंशानुक्रमविदः

ते द्रोणमनुशोचंतः कश्मलाभिहतौजसः पर्युपासंत शोकार्तास्ततः शारद्वतीसुतं ३ ते मुहूर्त्तं समाश्वास्य हेतुभिः शास्त्रसंमितैः रात्र्यागमे
महीपालाः स्वानि वेश्मानि भेजिरे ४ ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखं चिंतयंतः क्षयं तीव्रं दुःखशोकसमन्विताः ५ विशेषतः
सूतपुत्रो राजा चैव सुयोधनः दुःशासनश्च शकुनिः सौबलश्च महाबलः ६ उषितास्ते निशां तां तु दुर्योधननिवेशने चिंतयंतः परिक्लेशान्
पांडवानां महात्मनां ७ यत्तद्द्यूते परिक्लिष्टा कृष्णा नीता सभां तदा तत्स्मरंतोनुशोचंतो भृशमुद्विग्नचेतसः ८ तथा तु संचिंतयतां तान्क्ले
शान्द्यूतकारितान् दुःखेन क्षणदा राजन् जगामाब्दशतोपमा ९ ततः प्रभाते विमले स्थिता दिष्टस्य शासने चक्रुरावश्यकं सर्वे विधि
दृष्टेन कर्मणा १० ते कृत्वावश्यकार्याणि समाश्वास्य च भारत योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ११ कर्णं सेनापतिं कृत्वा कृतकौतुक
मंगलाः पूजयित्वा द्विजश्रेष्ठान् दधिपात्रघृताक्षतैः १२ ॥ ॥ ॥ ॥

मागधाः पाणिस्वनिकाः वंदिनः स्तुतिपाठकाः १२ ॥

१६ वृषकर्णः पश्यतामनार्देशषधी १८ सममन्यन्तसमागवयन्तवान् २० दुर्मरं दुःखेनापिमर्त्येमशक्यंस्त्वेकथा २२ ततमरणांदुःखकारंमन्ये ॥ ॥ ॥ ॥ ७

गोभिरश्वैश्चवस्त्रैर्भिर्वासोभिश्चमहाधनैः वंद्यमानाजयाशीर्भिः सूतमागधवंदिभिः १३ तथैवपांडवाराजन्कृतपूर्वाह्निकक्रियाः शिबिरान्निर्ययुस्तू
र्णंयुद्धायकृतनिश्चयाः १४ ततः प्रववृतेयुद्धंतुमुलंलोमहर्षणं कुरूणांपांडवानांचपरस्परजयैषिणां १५ तयोर्द्वेदिवसौयुद्धंकुरुपांडवसेन
योः कर्णेसेनापतौराजन्नभूदद्भुतदर्शनं १६ ततः शत्रुक्षयंकृत्वासमहांतंरणेवृषः पश्यतांधार्तराष्ट्राणांफाल्गुनेननिपातितः १७ त
तस्तुसंजयः सर्वंगत्वानागपुरंद्रुतं आचष्टधृतराष्ट्रायपयद्वृत्तंकुरुजांगले १८ जनमेजयउवाच आपगेयंहतंश्रुत्वाद्रोणंचापिमहारथं आ
जगामपरामार्तिंवृद्धोराजांबिकासुतः १९ सश्रुत्वानिहतंकर्णंदुर्योधनहितैषिणं कथंद्विजवरप्राणानधारयततुःखितः २० यस्मि
न्नजयाशांपुत्राणाममन्यतसपार्थिवः तस्मिन्हतेसकौरव्यः कथंप्राणानधारयत २१ दुर्मरंतमहंमन्येनृणांकृच्छ्रेपिवर्ततां २२
यत्रकर्णंहतंश्रुत्वानात्यजज्जीवितंनृपः तथाशांतनवंवृद्धंब्रह्मन्नबाह्लीकमेवच २२ ॥ ॥ ॥ ॥

५१

२१ इतिनैलकंठीयेभारतभावदीपेकर्णपर्वणिप्रथमोध्यायः हते १ हस्तिंपुरं ३ हाकष्टमितिचेत्युक्तिशपस्तक्वकंवाक्यमुक्त्वायच्चाहमेवक्रमयमाददे ४ स्त्रा ५ ६ ७ ८

द्रोणंचसोमदत्तंचभूरिश्रवसमेवच तथैवचात्मानसुहृदः पुत्रान्पौत्रांश्चपातितान् २४ श्रुत्वायन्नजहात्प्राणांस्तन्मन्येदुष्करंद्विज १ नत्वेसर्वमाचक्ष्वविस्तरेणमहामुने २५ नहितृप्यामिपूर्वेषांश्रृण्वानश्चरितंमहत् इतिमहाभारतेकर्णपर्वणिजनमेजयवाक्यंनामाध्यायः वैशंपायनउवाच हतेकर्णेमहाराजनिशिगावल्गणिस्तदा दीनोययौनागपुरमश्वैर्वातसमैर्जवे १ सहास्तिनपुरंगत्वाभृशमुद्विग्नचेतनः जगामधृतराष्ट्रस्यगृहंप्रक्षीणबांधवं २ सतमुद्वीक्ष्यराजानंकश्मलाभिहतौजसं ववंदेप्रांजलिर्भूत्वामूर्ध्ना पादौनृपस्यह। संपूज्यचयथान्यायंधृतराष्ट्रंमहीपतिं हाकष्टमितिचोक्त्वासततोवचनमाददे ४ संजयोहंक्षितिपतेकच्चिदास्तेसुखंभवान् स्वदोषेणापदंप्राप्यकच्चिन्नाद्यविमुह्यसि ५ हितान्युक्तानिविदुरद्रोणगांगेयकेशवैः अगृहीतान्यनुस्मृत्यकच्चिन्नकुरुषेव्यथां ६ रामनारदकण्वाद्यैर्हितमुक्तंसभातले नगृहीतमनुस्मृत्यकच्चिन्नकुरुषेव्यथां ७ सुहृदस्त्वद्धितेयुक्तान्भीष्मद्रोणमुखान्परैः निहतान्युधिसंस्मृत्यकच्चिन्नकुरुषेव्यथां ८ ॥ ॥ ॥ ॥

भूमि

क० ३

१ दंशितानांसंनद्धानां वसुसंभवः वसूनामंशेभ्यः संभूतः ११ भार्गवः रामः यस्मैभीष्मायाधनुर्वेदंउपाकृतः सोहतः शिष्यत्वेन १२ यस्यद्रोणस्य १३ स

नमेवंवादिनंराजासूतपुत्रंकृतांजलिं सुदीर्घमथनिश्वसन्दुःखार्त्तइदमब्रवीत धृतराष्ट्रउवाच आपगेयेहतेशूरेदिव्यास्त्रवितिसंजय द्रोणेच परमेष्वासेभृशंमेव्यथितंमनः ८ योरथानांसहस्राणिदंशितानां [illegible] दशैवतु अहन्यहनितेजस्वीनिजघ्नेवसुसंभवः १० तंहतंयज्ञसेनस्यपुत्रेणेहशिखंडिना पांडवेयाभिगुप्तेनश्रुत्वामेव्यथितंमनः ११ भार्गवःप्रददौयस्मैपरमास्त्रंमहात्मवेसाकाङ्क्षमेणायोबाल्येधनुर्वेदउपाकृतः १२ यस्यप्रसादात्कौंतेयाराजपुत्रामहारथाः महारथत्वंसंप्राप्तास्तथान्येवसुधाधिपाः १३ तंद्रोणंनिहतंश्रुत्वाधृष्टद्युम्नेनसंयुगेसत्यसंधंमहेष्वासंभृशंमेव्यथितंमनः १४ ययोर्लोकेपुमानस्त्रेनसमोऽस्तिचतुर्विधे तौद्रोणभीष्मौश्रुत्वाऽहंहतौमेव्यथितंमनः १५ त्रैलोक्येयस्यचास्त्रेषुनपुमान्विद्यतेसमः तंद्रोणंनिहतंश्रुत्वाकिमकुर्वतमामकाः १६ १६ १६ १६ १६

न्यसंधंअवितथप्रतिज्ञं १४ चतुर्विधे मुक्तंबाणादिअमुक्तंखड्गादि यत्नमुक्तंगालादि मुक्तामुक्तंसोप्यसंहारमस्त्रं १६ १६ १६ १६

एम० २

गम्नितेषतिकिमुकुर्वतेत्युनरोणसंवंधः १९ निमग्नानपिलव मानां जीवितेनैसयाचेष्टांकुर्वाणान् २३ दिष्टेदैवोपाहतेनेच्चभाविनः स्वरवस्याक्षासोभावि स्वस्पषा

संसप्तकानांचवलंपांडवेयमहात्मना धनंजयेनविक्रम्यगमितंयमसादनं १७ नारायणास्त्रेवहतेद्रोणपुत्रस्यधीमतः विप्रद्रुतेष्वनीकेषुकिमकु
र्वतमामकाः विप्रद्रुतानहंमन्येनिमग्नानशोकसागरे १८ प्लवमानानहतेद्रोणेसन्ननौकानिवार्णवे दुर्योधनस्यकर्णस्यभोजस्यकृतवर्मणः
२० मद्रराजस्यशल्यस्यद्रौणेश्चैवकृपस्यच मत्पुत्रस्यचशेषस्यतथान्येषांचसंजय २१ विप्रद्रुतेष्वनीकेषुमुखवर्णोभवत्कथं एतत्सर्वंयथा
वृत्तंतथागावल्गणेमम २२ आचक्ष्वपांडवेयानांमामकानांचविक्रमं संजयउवाच तवापराधाद्यद्वृत्तंकौरवेयेषुमारीष २३ तच्छ्रुत्वामाव्यथां
कार्षीर्दिष्टेनव्यथतेवुधः यस्मादभावीभावीवाभवेदर्थोनरंप्रति २४ अप्राप्तौतस्यवाप्राप्तौनकश्चिद्व्यथतेवुधः धृतराष्ट्रउवाच नव्यथाभृधि
काकाचिद्विद्यतेममसंजय २५ दिष्टमेतत्पुरामन्येकथयस्वयथेच्छकं २५ इतिश्रीमहाभारतेकर्णपर्वणि ॥ ॥ ॥ ॥

सौवाचुधोनव्यथतेतद्विपर्यर्वा प्यतीत्यर्थः २६ दिष्टंअवश्यंभावि २७ ह्रीतोपः ॥ ॥

स्प१

स्पता१



हतेत्वस्मिँ मुखाः दीनवदनाः २ ऊर्ध्वंऊर्ध्वगमनमेवनत्वधोवस्थानं ४ हस्तस्थानांचशोणितस्रुचकउक्त स्वंवद्धानांवंधशैथिल्यमपीसाहनानीति दिवि नियतमानानि नहोत्राणीवस्रवीमुखान्पंहशंयतेसर्वे ५ स्तिमितंतत्वं यतोगतसत्वंउद्विग्नचित्तं ७ वध्यंतिवध्यंतेपुरैरितिशेषः ८ किमत्रचित्रंकुरुणांपांडवैर्जितंचेत्ननराश्चर्यं ९ अस्माक

संजयउवाच हतेद्रोणेमहेष्वासेतवपुत्रामहारथाः वभूवुरस्वस्थमुखाविषण्णागतचेतसः १ अवाङ्मुखाः शस्त्रभृतः सर्वएवविशांपते अवेक्षमाणाः शोकार्त्तानाभ्यभाषन्परस्परं २ तान्दृष्ट्वाव्यथिताकारान्सैन्यानितवभारत ऊर्ध्वमेवनिरैक्षंतदुःखत्रस्तान्यनेकशः ३ शस्त्राण्येषांतुराजेंद्रशोणिताक्तानिसर्वशः प्राभ्रश्यंतकराग्रेभ्योदृष्ट्वाद्रोणंहतंयुधि ४ तानिवद्धान्यरिष्टानिलंवमानानिभारत अदृश्यंतमहाराजनक्षत्राणियथादिवि ५ तथातुस्तिमितंदृष्ट्वागतसत्वमवस्थितं वलंतवमहाराजराजादुर्योधनोब्रवीत ६ भवतांवाहुवीर्येहिसमाश्रित्यमयायुधि पांडवेयाः समाहूतायुद्धंचेदंप्रवर्त्तितं ७ तदिदंनिहतेद्रोणेविषण्णमिवलक्ष्यते युध्यमानाश्चसमरेयोधावध्यंतिसर्वशः ८ जयोवापिवधोवापियुध्यमानस्यसंयुगे भवेत्किमत्रचित्रंवैयुध्यध्वंसर्वतोमुखाः ९ पश्यध्वं वैमहात्मानंकर्णंवैकर्त्तनंयुधि प्रचरंतंमहेष्वासंदिव्यैरस्त्रैर्महावलं १० ॥ ॥ ॥ ॥ ॥

दर१ म१

मसहृजयोजातरस्याहय शपस्वमिस्याहिना १० ॥ ॥

ज्ञ१

१तां द्रोणपर्वच्चसिद्धा १३ रुविरांवलं १५ दृष्ट्वनदर्शयिष्यत २१ ऋ पुंखेषुसंसक्ताः येपिमारासशरा सायेरणपुंखेषुधेरिनेषुपुंखेनसंसक्ताइषुधाराः सपृथैनिरेषुसंधानादविछि
स्पर्धे

यस्यैवयुधिसंत्रासात्कुंतीपुत्रोधनंजयः निवर्त्ततेसदामंदः सिंहात्क्षुद्रमृगोयथा ११ येननागायुतप्राणोभीमसेनोमहाबलः मानुषेणैव युद्धेनतामर्वं प्रवेशितः १२ येनदिव्यास्त्रविछूरोमायावीसघटोत्कचः अमोघयारणोश त्यानिहतोभैरवंनदन् १३ तस्यदुर्वारवीर्यस्य त्वसंधस्यधीमतः वाक्कोइविरामऋष्यमयदृष्ट्यधसंयुगे १४ द्रोणपुत्रस्यविक्रांतंराधेयस्यैवचोभयोः पश्यंतपांडुपुत्रारत्तेविह्वलावासव योरिव १५ सर्वएवभवंतस्थशक्ताः प्रत्येकशोपिवा पांडुपुत्रान्रणेहंतंससैन्यान्किमुसंहताः वीर्यवंतः कृतास्त्राश्चद्दृश्यथाद्यपरस्परं १६ संजयउवाच एवमुक्त्वाततः कर्णश्चक्रेसेनापतिंतदा तवपुत्रोमहावीर्योभ्रातृभिः सहितोनघ १७ सेनापत्यमवाप्याथकर्णो राजन्महारथः सिंहनादंविनद्योच्चैः प्रायुध्यतरणोत्कटः १८ ससंजयानांसर्वेषांपांचालानांचमारिष कैकयानांविदेहानांचकारकदनं महत् १९ तस्येषुधाराः शतशः प्रादुरासन्शरासनात् अग्रेपुंखेषुसंसक्तायथाभ्रमरपंक्तयः २० सपीडयित्वापांचालान्पांडवांश्च तरस्विनः हत्वासहस्रशोयोधानर्जुनेननिपातितः २१ ॥ ॥ ॥ ॥ ॥

त्पश्चवाहाइस्पर्धः २० पीडयित्वाहत्वसनेककर्न्नेकोपिकापसपष्ठ्यांदसः अग्नेमोपिदृष्टपेतेइतिवनिर्वर्तेसाशाहः पीडयननिघ्नं तिवार्थः २१ ॥ ॥ ७

न्नि१

क० ५

इतिकर्णपर्वणिगांधारीतृतीयः एतत् १ विह्वलः चलनासमर्थः का[illegible]वृत्यजितः ४ आंतः पुर[illegible]स्त्रियः ६ कदल्यइववेपमानाश्चासन्निशेषः ८ दृष्ट्वामनसैवात्मपरत्ययेन उः खंज्ञात्वा ९ १०

इतिश्रीमहाभारतेकर्णपर्वणिसंजयवाक्यंनामाध्यायः वैशंपायनउवाच एतच्छ्रुत्वामहाराजधृतराष्ट्रोंबिकासुतः शोकस्यांतमपश्यन्वैहतंमत्वासु
योधनं १ विह्वलः पतितोभूमौनष्टचेताइवद्विपः तस्मिन्निपतितेभूमौविह्वलेराजसत्तमे २ आर्त्तनादोमहानासीत्स्त्रीणांभरतसत्तम
सशब्दः पृथिवींकृत्स्नांपूरयामाससर्वशः ३ शोकार्णवेमहाघोरेनिमग्नाभरतस्त्रियः रुरुदुर्दुःखशोकार्त्ताभृशमुद्विग्नचेतसः ४ राजानं
चसमासाद्यगांधारीभरतर्षभ निःसंज्ञापतिताभूमौसर्वाश्चांतःपुरस्त्रियः ५ ततस्ताः संजयोराजन्समाश्वासयदातुराः मुह्यमानाः स्रव
ऊशोमुंचंत्योवारिनेत्रजं ६ समाश्वस्ताःस्त्रियस्तास्तुवेपमानामुहुर्मुहुः कदल्यइववातेनधूयमानाः समंततः ७ राजानंविदुरश्चापिप्र
ज्ञाचक्षुषमीश्वरं आश्वासयामासतदासिंचंस्तोयेनकौरवं ८ सलब्ध्वाशनकैः संज्ञांताश्चदृष्ट्वास्त्रियोनृपः उन्मत्तइवराजेंद्रस्थितस्तूष्णींवि
शांपते ९ ततोध्यात्वाचिरंकालंनिश्वसंश्चपुनःपुनः स्वान्पुत्रान्गर्हयामासबहुमेनेचपांडवान् १० ॥ ॥ ॥

रा॥० ५

जीवन्नरोमद्रुशताानियश्चेदितिमनतिनिधापाहयत्स्येति १३ जयेइति इष्टवियोगमात्रेणादृशारथादिर्म्नितः अप्सन्तुजयेनेशशपमधिकंमरणाकारणमस्तीतिभावः उक्तं संक्षेपेण पुनर्ब्रूहिवि

पी४

गृहीत्वाचात्मनोबुद्धिंशकुनेःसौबलस्यच ध्यात्वातुसुचिरंकालंवेपमानोमुहुर्मुहुः ११ संस्तभ्यचमनोभूयोराजाधैर्यसमन्वितः पुनर्गावल्गणिंसूतंपर्यपृच्छतसंजयं १२ यत्त्वयाकथितंवाक्यंश्रुतंसंजयतन्मया कच्चिद्दुर्योधनःसूतनगतोवैयमक्षयं १३ जयेनिराशः पुत्रोमेसततंजयकामुकः ब्रूहिसंजयतत्त्वेनपुनरुक्तांकथामिमां १४ एवमुक्तोब्रवीत्सूतोराजानंजनमेजय हतोवैकर्त्तनोराजन्सहपुत्रैर्महारथैः१५ भ्रातृभिश्चमहेष्वासैः सूतपुत्रैस्तनुत्यजैः दुःशासनश्चनिहतः पांडवेनयशस्विना १६ [illegible]तेवरुधिरंकोपाद्भीमसेनेनसंयुगे॥ ॥इतिश्रीमहाभारतेकर्णपर्वणिधृतराष्ट्रशोकोनाम १७ वैशंपायनउवाच इतिश्रुत्वामहाराजधृतराष्ट्रोंबिकासुतः अब्रवीत्संजयंसूतंशोकसंविग्नमानसः [illegible]ष्प्रणीतेनमेतातपुत्रस्यादीर्घदर्शिनः हतंवैकर्त्तनंश्रुत्वाशोकोमर्माणिकृंतति २ तस्यमेसंशयंछिंधिदुःखपारंतितीर्षतः कुरूणांसंजयानांचकेच[illegible]जीवंतिकेमृताः ३ संजयउवाच हतः शांतनवोराजन्दुराधर्षःप्रतापवान् हत्वापांडवयोधानामर्बुदंदशभिर्दिनैः ४ ॥ ॥ ॥

लारेण १६ चतुर्थीः इति १ दुःप्रणीतेनदुर्नयेनअदीर्घदर्शिनो विनोल्पायुषः मयैवदुर्नसापुत्रोमरणोन्मुखः कृतइतिभावः हत्वानिघ्नन् २ ४ ॥ ॥

क०
६

निहतस्तैव दुर्हृदस्य संचयः ज्ञातरश्मिशेषः ५ हतोगतः परलोकमिति शेषः एवमग्रेपि योज्यं ७ ८ ९ १० ११ १४

तथा द्रोणो महेष्वासः पांचालानां रथव्रजान् निहत्य युधि दुर्धर्षः पश्चात् पुरुकारथो हतः ५ हतशेषस्य भीष्मेण द्रोणेन च महात्मना अर्द्धं निहत्य सैन्यस्य कर्णो वैकर्तनो हतः ६ विविंशतिर्महाराज राजपुत्रो महाबलः आनर्त्तयोधान् शतशो निहत्य निहतो रणे ७ तथा पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन् क्षीणवाहायुधः शूरः स्थितो भिमुखतः परान् ८ घोररूपान् परिक्लेशान् दुर्योधनकृतान् बहून् प्रतिज्ञां स्मरता चैव भीमसेनेन पातितः ९ विंदानुविंदावावंत्यौ राजपुत्रौ महारथौ कृत्वा त्वसुकरं कर्म गतौ वैवस्वतक्षयं १० सिंधुराष्ट्रमुखानीह दश राष्ट्राणि पानि ह वशे तिष्ठंति वीरस्य यः स्थितस्तव शासने ११ अक्षौहिणीर्दशैकां च विनिर्जित्य शितैः शरैः अर्जुनेन हतो राजन् महावीर्यो जयद्रथः १२ तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः वर्त्तमानः पितुः शास्त्रे सौभद्रेण निपातितः १३ तथा दौःशासनिः शूरो बाहुशाली रणोत्कटः द्रौपदेयेन संगम्य गमितो यमसादनं १४ किरातानामधिपतिः सागरानूपवासिनां देवराजस्य धर्मात्मा प्रियो बहुमतः सखा १५ १५

स३

श०
६

दत्तोमहीपालः क्षत्रधर्मरतः सदा धनंजयेनविक्रम्यगमितोयमसादनं १६ तथाकौरवदायादोन्यस्तशस्त्रोमहायशाः हतोभूरिश्रवाराजन
शूरः सात्यकिनायुधि १७ श्रुतायुरपिचांबष्टः क्षत्रियाणांधुरंधरः चरन्तमभीतवत्संख्येनिहतः सव्यसाचिना १८ तवपुत्रः सदामर्षीकृतास्त्रोयुद्धदुर्मदः दु
शासनोमहाराजभीमसेनेनपातितः १९ यस्यराजनाजानीकंबहुसाहस्रमद्भुतं सुदक्षिणः ससंग्रामेनिहतः सव्यसाचिना २० कोशलानामधिपतिर्हत्वा
बहुमतान्परान सौभद्रेणेहविक्रम्यगमितोयमसादनं बृहद्बलोयोधयित्वातुभीमसेनंमहारथं चित्रसेनस्तवसुतोभीमसेनेनपातितः २२ मद्रराजात्मजः शूरः
परेषांभयवर्धनः असिचर्मधरः श्रीमान्सौभद्रेणनिपातितः २३ समः कर्णस्यसमरेयः सकर्णस्यपश्यतः वृषसेनोमहातेजाः शीघ्रास्त्रोदृढविक्रमः २४ अ
भिमन्योर्वधंश्रुत्वाप्रतिज्ञामपिचात्मनः धनंजयेनविक्रम्यगमितोयमसादनं २५ नित्यंप्रसक्तवैरोयः पांडवैः पृथिवीपतिः विश्राव्यवैरंपार्थेनश्रुतायुःसनि
पातितः २६ शल्यपुत्रस्तुविक्रांतः सहदेवेनमारिष हतोरुक्मरथोराजन्भ्राताभातुलजोयुधि २७ राजाभगीरथोवृद्धोबृहत्क्षत्रश्चकैकयः पराक्रमंतो विक्रान्तो
निहतौवीर्यवंतौरौ २८ भगदत्तस्ततोराजन्कृतप्रज्ञोमहाबलः श्येनवच्चरतासंख्येनकुलेननिपातितः २९ पितामहस्तवतथाबाह्लीकः सहबाह्लिकैः
निहतोभीमसेनेनमहाबलपराक्रमः ३० जयत्सेनस्तथाराजन्जारासंधिर्महाबलः मागधोनिहतः संख्येसौभद्रेणमहात्मना ३१ पुत्रस्तेदुर्मुखोराजन
दुःसहश्चमहारथः गदयाभीमसेनेननिहतौशूरमानिनौ ३२ दुर्मर्षणोदुर्विषहोदुर्जयश्चमहारथः कृत्वात्वसुकरंकर्मगतावैवस्वतक्षयं ३३

क० १

उभौकलिंगवृषकौभ्रातरौयुद्धदुर्मदौ हत्वावासकरंकर्मगतौवैवस्वतक्षयं ३४ सविवोहृषभमोतिशूरः परमवीर्यवान भीमसेनेनविक्रम्यगमितोय
मसादनं ३५ तथैववीरोराजानागायुतवलोमहान समरेपांडुपुत्रेणनिहतः सव्यसाचिना ३६ वशातयोमहाराजाहिसाहस्राःप्रहारिणः शूरसेना
श्चविक्रांताः सर्वेयुधिनिपातिता ३७ अभीषाहाःकवचिनःप्रहरंतोरणोत्कटाः शिवयश्चरथोदाराःकलिंगसहिताहताः ३८ गोकुलेनित्यसंवृद्धा
युद्धेपरमकोपनाः तेषांहत्वकवीराश्चनिहताः सव्यसाचिना श्रेणयोवहुसाहस्राःसंसप्तकगणाश्चये तेसर्वेपार्थमासाद्यगतावैवस्वतक्षयं सा लोत
वमहाराजराजानोवृषकाचलौ त्वदर्थमतिविक्रांतौनिहतौसव्यसाचिना उग्रकर्मामहेष्वासोनामतः कर्मतस्तथा शाल्वराजोमहावाहुर्भीमसेनेन
पातितः ३९ ओघवांश्चमहाराजवृहंतः सहितौरणे पराक्रमंतौमित्रार्थेगतौवैवस्वतक्षयं तथैवरथिनांश्रेष्टःक्षेमधूर्तिर्विशांपते निहतोगदया
राजन्भीमसेनेनसंयुगे ४० ॥ ॥ ॥ ॥ ॥ ॥

रम०

अपारहत्तकरवीरा अपगतं आरत्नं कुंकुन्तितं संग्रामात्परावर्त्तितं येषां ते संसप्तकसहचरगोपालकाः ४५ खरवंधुरयानवान्गर्दभसंयुक्तरथवान् ४८ क्षेमेनन क्कारिणा नरको मुरश्च
१८२ ६२

तथा राजन्महेष्वासो जलसंधो महाबलः सुमहत्कदनं कृत्वा हतः सात्यकिना रणे ४१ अलंबुषो राक्षसेंद्रः खरबंधुरयानवान् घटोत्कचेन विक्रम्य
गमितो यमसादनं ४२ राधेयः सूतपुत्र भ्रातरश्च महारथाः कैकयाः सर्वशश्चापि निहताः सव्यसाचिना ४३ मालवा मकाश्चैव द्रविडाश्चोग्रक
र्मिणः यौधेयाश्च ललित्याश्च क्षुद्रकाश्चाप्युशीनराः ४४ मावेल्लकास्तुंडिकेराः सावित्रीपुत्रकाश्च ये प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च
मारिष ४५ पत्तीनां निहताः संघा हयानां प्रयुतानि च रथव्रजाश्च निहता हताश्च वरवारणाः ४६ सध्वजाः सायुधाः शूराः सवर्मांवरभूषणाः
कालेन महता यत्ताः कुशलैर्ये च वर्द्धिताः ४७ ते हताः समरे राजन्पार्थेनाक्लिष्टकर्मणा अमे तथामितबलाः परस्परवधैषिणः ४८ एते
चान्ये च बहवो राजानः सगणा रणे हताः सहस्रशो राजन्यन्मां त्वं परिपृच्छसि ४९ एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे महेंद्रेण यथा वृत्रो
यथा रामेण रावणः ५० यथा कृष्णेन नरको मुरश्च निहतो रणे कार्त्तवीर्यश्च रामेण भार्गवेण यथा हतः ५१ ॥ ॥ ७

पयेतन्वयः ४९ ५० ५१ ५१ ५१ ५१ ५१ ५१ ५१

कर्णस्तथाहतस्त्वनुकृष्यते ५८ पंचमः आख्याताः १ २ ३ ४ ५ ६ ६

सज्ञातिबांधवः शूरः समरेषु हुदुर्मदः रणोक्त्वा महायुद्धं घोरं [illegible] त्रैलोक्यमोहनं ५२ यथा स्कंदेन महिषो यथा रुद्रेण चांधकः तथार्जुनेन स
हतो द्वैरथे युद्धदुर्मदः ५३ समात्यबांधवो राजन्कर्णः प्रहरतां वरः जयाशा धार्त्तराष्ट्राणां वैरस्य च मुखं यतः ५४ तीर्णास्तत्पांडवो राजन्यत्पुरा नाव
बुध्यसे उच्यमानो महाराज बंधुभिर्हितकांक्षिभिः ५५ तदिदं समनुप्राप्तं व्यसनं सुमहात्मनां पुत्राणां राज्यकामानां त्वया राजन्हितैषिणा ५६ अहि
तान्येव वीराणि तेषां तत्फलमागतं॥ ॥इति श्रीमहाभारते कर्णपर्वणि संजयवाक्यं धृतराष्ट्र उवाच आख्याता मामकास्तात निहता युधि पांड
वैः हतांश्च पांडवेयानां मामकैर्ब्रूहि संजय १ संजय उवाच कुंती योधि विक्रांता महात्मानो महाबलाः सानुबंधाः सहामात्याः गांगेयेन नि
पातिताः २ नारायणा बालभद्राः शूराश्च शतशोपरे अनुरक्ताश्च वीरेण भीष्मेण युधि पातिताः ३ समः किरीटिना संख्ये वीर्येण च बलेन च सत्य
जित्सत्यसंधेन द्रोणेन निहतो युधि ४ पांचालानां महेष्वासाः सर्वे युद्धविशारदाः द्रोणेन सह संगम्य गता वैवस्वतक्षयं ५ तथा विराटद्रुपदौ वृद्धौ स
हसुतौ नृपौ पराक्रमं तौ मित्रार्थे द्रोणेन निहतौ रणे ६ ॥ ॥ ॥ ॥

७ षड्भिर्द्रोणाद्यैर्णिशल्यकर्णकृपकृतवर्मभिः परमैरथैः अतिरथैः महामात्रैः मुख्यैः अशक्नुवद्भिर्कैकेकयोनहंतमिति शेषः ७ ॥ ॥ ॥

योवालएवसमरेसंमितः सव्यसाचिना केशवेनचदुर्धर्षोवलदेवेनवाविभो ७ परेषांकदनंकृत्वामहारथविशारदः पौत्रावायमिहावीरैः
षड्भिः परमकैरथैः ८ अशक्नुवद्भिर्बीभत्सुंअभिमन्युर्निपातितः कृतंतंविरथंवीरंक्षत्रधर्मेव्यवस्थितं ९ दौःशासनिर्महाराजसौभद्रंहृत
वानरणे सपत्नानांनिहंताचमहत्सासेनपाहृतः १० अंवष्टस्यसुतःश्रीमान्मित्रहेतोःपराक्रमन् आसाद्यलक्ष्मणंवीरंदुर्योधनसुतंरणे ११
सुमहत्कदनंकृत्वागतोवैवस्वतक्षयं दुहंतः समहेष्वासः कृत्वा पुद्धदुर्मदः १२ दुःशासनेननविक्रम्यगमितोयमसादनं मणिमान्दंडधा
रौचराजानौयुद्धदुर्मदौ १३ पराक्रमंतौमित्रार्थेद्रोणेनयुधिपातितौ अंशुमान्भोजराजस्तुसहसैन्योमहारथः १४ भारद्वाजेनविक्रम्यग
मितोयमसादनं सामुद्रश्चित्रसेनस्तुसहपुत्रेणभारत १५ समुद्रसेनेनवलात्क्रमितोयमसादनं अनूपवासीनीलश्चव्याघ्रदत्तश्चवीर्यवा
न् १६ अश्वत्थाम्नाविकर्णेनगमितोयमसादनं चित्रायुधश्चित्रयोधीकृत्वाचकदनंमहत् चित्रमार्गेणविक्रम्यविकर्णेनहतोमृधे वृ
कोदरसमोयुद्धेहृतःकैकयपोधिभिः १७ कैकेयेनचविक्रम्यभ्रात्राभ्रातानिपातितः जनमेजयोगदायोधीपार्वतीयःप्रतापवान् १८ ॥

रम

क० येषमानौएकनामानौभ्रातरौ १९ २० २१ २२ २३ २४ २५ ३० ३१ ॥ ५२

९

दुर्मुखेनमहाराजतवपुत्रेणपातितः रोधमानोनरव्याघ्रोरोचमानोमहाविभ १९ द्रोणेनयुगपद्राजन्दिवंसंप्रापितौशरैः नृपाश्चप्रतिपुधांतः पराक्रांता
विशांपते २० कृत्वानसुकरंकर्मगतावैवस्वतंक्षयं पुरुजित्कुंतिभोजश्चमातुलोसव्यसाचिनः २१ संग्रामनिर्जितांलोकान्गमितोद्रोणसायकैः अ
भिभूः काशिराजश्चकाशिकैर्बहुभिर्वृतः २२ वसुदानस्यपुत्रेणन्यासितोदेहमाहवे अमितौजायुधामन्युस्तन्नमौजाश्चवीर्यवान हत्वाशत्रोमहेष्वा
सः सत्रदेवश्चमारिष २३ निहतःपुशतशः शूरानस्मदीयैर्निपातितः मित्रवर्माचपांचाल्यः क्षत्रधर्माचभारत २४ द्रोणेनपरमेष्वासोगमितोयमसा
दनं शिखंडितनयोयुद्धेक्षत्रदेवोयुधांपतिः २५ लक्ष्मणेनहतोराजंस्तवपौत्रेणभारत सुचित्रश्चित्रवर्माचपितापुत्रौमहारथौ २६ प्रचरंतौमहा
वीरौद्रोणेननिहतौरणे वार्द्धक्षेमिर्महाराजसमुद्रइवपर्वणि २७ आयुधक्षयमासाद्यप्रशांतिपरमांगतः सेनाविंदुसुतः श्रेष्ठशस्त्रवान्प्रवरोयुधि २८
वाल्हीकेनमहाराजकौरवेंद्रेणपातितः धृष्टकेतुर्महाराजचेदीनांप्रवरोरथः २९ कृत्वानसुकरंकर्मगतोवैवस्वतक्षयं तथासत्यधृतिर्वीरः कृत्वा
कदनमाहवे ३० पांडवार्थेपराक्रांतोगमितोयमसादनं सेनाविंदुः कुरुश्रेष्ठः कृत्वाकदनमाहवे ३१ ३१ ॥ ॥ ॥

द्रो०

९

स१

३८ ष४ः ६ मामकस्यक्षतोनेकस्यकेद्रोणस्यनिशापितेोदकस्यष्टइमाँईवावशेषंनपश्यामि ककुदेषाधनपुरुषसमूहेभीष्मद्रोणकर्णरूपेमर्दितेनाशितेसति अवसिन्नष्ठ१ २

शतंशतंसहस्रदेशकं आर्यौविभक्तिव्यत्ययः कुंजराणामयुतेनतल्यंवाक्षेर्वलंयस्यनस्मापिवधंनमृष्यामीतिनम्रपितमृष्यामेवमत्युजपिनोभीष्मस्यक्षात्रब्रासोभपवलौनो ५२

निहतो२

पुत्रस्तशिशुपालस्यक्लकेतःपृथिवीपतिः निहत्यशात्रवान्संख्येद्रोणेननिहतोयुधि ३२ तथासत्यधृतिर्वीरोमदिराश्वश्ववीर्यवान् सर्वेहन्नरव विक्रांतोद्रोणसायकैः ३३ श्रेणिमांश्चमहाराजयुध्यमानःपराक्रमी कृत्वानसुकरंकर्मगतोवैवस्वतक्षयं ३४ तथैवयुधिविक्रांतोमागधःपर मास्ववित् भीष्मेणनिहतोराजन्शेतेषपरवीरहा विराटपुत्रःशंखस्तुउत्तरश्चमहारथः ३५ कुर्वंतोसमहत्कर्मगतौवैवस्वतक्षयं वसुदानश्चक दनंकुर्वाणोतीवसंयुगे ३६ भारद्वाजेनविक्रम्यगमितोयमसादनं एतेचान्येचवहवःपांडवानांमहारथाः ३७ हताद्रोणेनविक्रम्ययन्मांत्वंपरि पृच्छसि इतिश्रीमहाभारतेकर्णपर्वणिसंजयवाक्यंधृतराष्ट्रउ० मामकस्यास्यसैन्यस्यहतशेषस्यसंजय अवशेषंनपश्यामिककुदेमर्दितेसति १ तोहिवीरौमहेष्वासौमदर्थेकुरुसत्तमौ भीष्मद्रोणौहतौश्रुत्वानार्थोवैजीवितेनमे २ नचशोचामिराधेयंहतमाहवशोभिनं यस्यवाह्वोर्वलंत स्यंकुंजराणांशतंशतं ३ ॥ ॥ ॥ ॥ ॥ ॥

नोद्रोणस्यवधंकुर्वतांपरेषांकर्णवधस्येषत्करस्वादितिभावः ३ ॥ ॥ ॥ ॥ ॥ ७

क० मृताः मृतप्रायाः चित्राणि अनेकनानायुधप्रमवक्र्माणि शुभ्राणि दीप्यमंति चतुर्विधानि हस्तमुक्तामुक्तशस्त्रभेदेधानि विहितानि धनुर्वेदोदितानि चित्रमुग्रदिव्यविहितान्येववावत्प्रविधा
१० नि अत्रविहितानि कृत्रिमाणीति प्रांचः अस्त्रांतरनिवर्त्यमाग्नेयादिनाशिमात्रनिवर्त्यनारायणास्त्रादि पयोक्तैकनिवर्त्यं ब्रह्मशिरआदि सर्वथाप्यनिवर्त्यं पाशुपतादि एवं चतुर्वि

मं१ ग४

हतं न वरं सैन्यं मे यथा शंससि संजय अहतानपि मे शंससे जीवंति केचन ४ एतेषु हि मृतेष्वद्य येन त्वया परिकीर्तिताः ये पि जीवंति तान्सर्वान्मृता
निति मन्ये ममेम ५ संजय उवाच यस्मिन्महास्त्राणि समर्पितानि चित्राणि शुभ्राणि चतुर्विधानि दिव्यानि राजन्निहितानि चैव द्रोणेन वीरे द्विज
सत्तमेन ६ महारथः कृतिमान्क्षिप्रहस्तो दृढायुधो दृढमुष्टिर्दृढेषुः स वीर्यवान्द्रोणपुत्रस्तरस्वी व्यवस्थितो योद्धुकामस्त्वदर्थे ७ आनर्त
वासी हृदिकात्मजोसौ महारथः सात्वतानां वरिष्ठः स्वयं भोजः कृतवर्मा कृतास्त्रो व्यवस्थितो योद्धुकामस्त्वदर्थे ८ आर्तायनिः समरे दुःप्र
धर्षः सेनाग्रणीः प्रथमस्तावकानां यः स्वस्रीयान्पाण्डवेयान्विसृज्य सत्यां वाचं तां चिकीर्षुस्तरस्वी ९ तेजोवधं सूतपुत्रस्य संख्ये प्रतिश्रु
त्याजातशत्रोः पुरस्तात् दुराधर्षः शक्रसमानवीर्यः शल्यः स्थितो योद्धुकामस्त्वदर्थे १० ॥ ॥ ॥ ॥ ॥

धानि वीरे विहितानि समर्पितानि ६ कृतिमान् अवंध्यप्रयत्नः ८ आर्तायनिः शल्यः स्वस्रीयान्भागिनेयान् उभयोरपि भागिनेयत्वेपि लिंगसमवायात्स्त्रैवं भागिनेयत्वं ९ ॥ ॥

१०

कृपाभोजीशीघ्रभोजी १८ नागपतिप्रपायीनागैः पतिमिश्रप्रयांतुशीलमस्य नागरथप्रपायीजितपांडवानां १९

आजानेयैः सैंधवैः पार्वतीयैर्नदीजकांबोजवनायुजैश्च गांधाराजः स्वबलेनयुक्तोव्यवस्थितोयोद्धुकामस्त्वदर्थे ११ शारद्वतोगौतमश्चापि राजन्महा
बाहुर्वीरो चित्रास्त्रयोधी धनुश्चित्रंसमहद्धारमाहंस्त्ववस्थितोयोद्धुकामःप्रगृह्य १२ महारथः कैकयराजपुत्रः सदश्वयुक्तंचपताकिनंच रथंसमास्थाय
कुरुप्रवीरोव्यवस्थितोयोद्धुकामस्त्वदर्थे १३ तथासुतस्तेज्वलनार्कवर्णंरथंसमास्थायकुरुप्रवीरः अवस्थितः पुरुमित्रोनरेंद्रव्यभ्रेसूर्योभ्राजमानो
यथाच १४ दुर्योधनोनागकुलस्यमध्येव्यवस्थितः सिंहइवावभासे रथेनजांबूनदभूषणेनव्यवस्थितः समरेयोत्स्यमानः १५ सराजमध्येपुरु
षप्रवीरोराजजांबूनदचित्रवर्मा पद्मप्रभोवह्निरिवाल्पधूमोमेघांतरेसूर्यइवप्रकाशः १६ तथासुषेणोथासिचर्मपाणिस्तवात्मजः सत्यसेनश्चवीरः
अवस्थितौचित्रसेनेनसार्धं हृष्टात्मानौसमरेयोद्धुकामौ १७ ह्रीनिषेवोभारतराजपुत्रउग्रायुधः क्षणभोजीसुवर्चाः जारासंधिःप्रथमश्चादृढश्चचित्रा
युधश्रुतवर्माजयश्च १८ शलश्चसत्यव्रतदुःशलौचव्यवस्थिताः सहसैन्यानराग्र्याः कैतव्यानामधिपःशूरमानीरणेरणेशत्रुहाराजपुत्रःरथी
हयीनागपत्तिप्रयायीव्यवस्थितोयोद्धुकामस्त्वदर्थे १९ ॥ ॥ ॥ ॥ ॥

२३ सैन्याः सेनामर्हंतीति ते राजानः यथापर्यंपक्रहृदयेपित्तीवमानाश्चाख्याताः इदंमाविजयपराजयादिकंश्नतिस्मनेनयक्रहृदयबलत्तोनत्वेनत्यक्तंसप्हमभिगच्छामिजानामि अथाभियन्नितः फ

वीरः श्रुतायुश्चधृतायुधश्चचित्रांगदश्चित्रसेनश्चवीरः अवस्थितायोद्धुकामानराश्चाप्रहारिरणोमानिनः सत्यसंधाः २० कर्णात्मजः सत्यसंधोमहा
त्मावस्थितः समरेयोद्धुकामः अथापरौकर्णसुतौवरास्त्रौअवस्थितौलघुहस्तौनरेंद्र २१ महद्बलंदुर्भिदमल्पवीर्यैः समन्वितौयोद्धुकामौमसत्वदर्थे
२२ एतैश्चमुख्यैरपरैश्चराजन्योधप्रवीरैरमितप्रभावैः अवस्थितोनागकुलस्यमध्येयथामहेंद्रः कुरुराजोजयाय धृतराष्ट्रउवाच आख्यातोजीवमा
नायेपरेभ्योन्येयथातथं २४ इतीदमवगच्छामिव्यक्तंसर्वेनिपातिताः वैशं० एवंब्रुवन्नेवतदाधृतराष्ट्रोंविकासुतः २५ हतप्रवीरंविध्वस्तंकिंचिच्छेषंस्व
कंबलं श्रुत्वाव्यामोहमागच्छच्छोकव्याकुलितेंद्रियः मुह्यमानोब्रवीच्चापिमुहूर्तंतिष्ठसंजय व्याकुलंमेमनस्तातश्रुत्वासुमहदप्रियं २६ मनोमुह्य
तिचांगानिनचशक्नोमिधारितं इत्येवमुक्त्वावचनंधृतराष्ट्रोंविकासुतः भ्रांतचित्तस्ततसोथबभूवजगतीपतिः २७ ॥ ॥ ॥ ॥

लोपप्रतिमः तेनजयोमदीयानांनास्तीतिनिश्चितोमेमतिभावः २४ अंगानिचक्षुरादीनिमनश्चमुह्यंति २५ २७ ॥ ॥ ॥ ॥ ॥

सक्रमः श्रुत्वा भार्गवस्य रामस्य बुद्धेश्यवा ६ कर्णस्य वधं संचिंत्य मनसा लोचयन्दृष्टान्तं जगत्त्वसमेमंवा नास्तीति संचिंत्य निश्चित्य विललापेति तृतीयेन संबंधः प्राणिनां अन्ये वध्या लक्षणादिन्य
षांतर्णात्वामांमंदत्वादल्पवीर्यत्वात् इति अनेनैव वधकारणाविनाशनं स्यादपीति हेतोराशयेवेन सिध्यमानइव विह्वलांगः यथा भ्राष्ट्रे ध्मायमानया धाणादि शीर्यते तद्वद्विशीर्णाङ्गइत्यर्थः ९

इति श्रीमहाभारते कर्णपर्वणि संजयवाक्यं नाम जनमेजयउवाच श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैव पलायितान् नरेंद्रः किंचिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत् १ प्राप्तवान्परमं दुःखं पुत्रव्यसनजं महत् तस्मिन्यदुक्तवान्काले तन्ममाचक्ष्व पृच्छतः २ वैशंपायनउवाच श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतं भूतसंमोहनं भीमं मेरोः संसर्पणं यथा ३ चित्तमोहमिवायुक्तं भार्गवस्य महात्मनः पराजयमिवेंद्रस्य द्विषद्भ्यो भीमकर्मणः ४ दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः संशोषणमिवाचिंत्यं समुद्रस्याक्षयांभसः ५ महीवियद्दिगीशानां सर्वनाशमिवाद्भुतं कर्मणोरिव वैफल्यमुभयोः पुण्यपापयोः ६ संचिंत्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः नेदमस्तीति निश्चित्य कर्णस्य समरे वधं ७ प्राणिनामेवमन्येषां स्यादपीति विनाशनं शोकाग्निना दह्यमानो धम्यमानइवाशये ८ विह्वलांगः श्वसन्दीनो हाहेत्युक्त्वा सुदुःखितः विललाप महाराज धृतराष्ट्रोंबिकासुतः ९ ॥ ॥ ॥

१० न निवर्त्तेत इति छेदः १६ अवाचीनं चिंतयाधोमुखं १७ १८ १९ २० ॥ ॥ ॥

धृतराष्ट्र उवाच संजयाधिरथिर्वीरः सिंहद्विरदविक्रमः वृषभप्रतिमस्कंधो वृषभाक्षगतिस्वरः १० वृषभो वृषभस्येव यो युद्धे न निवर्त्तते शत्रोरपि महेंद्र
स्य वज्रसंहननो युवा ११ यस्य ज्यातलशब्देन शरवृष्टिरवेण च रथाश्वनरमातंगा नावतिष्ठंति संयुगे १२ यमाश्रित्य महाबाहुं द्विषां जयकांक्षया दुर्योध
नोकरोद्वैरं पांडुपुत्रैर्महारथैः १३ स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः १४ यो नामन्यत वै नित्यमच्युतं च धनंज
यं न वृष्णीन्सहितानन्यान्स्वबाहुबलदर्पितः १५ शार्ङ्गगांडीवधन्वानौ सहितावपराजितौ अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे १६ इति यः सततं
मंदमवोचल्लोभमोहितं दुर्योधनमवाचीनं राज्यकामुकमातुरं १७ योजयेत्सर्वकांबोजानावंत्यान्केकयैः सह गांधारान्मद्रकान्मत्स्यांस्त्रिगर्तांस्तंगणा
न् १८ पांचालांश्च विदेहांश्च कुलिंदान्काशिकोशलान् सुह्मानंगांश्च वंगांश्च निषादान्पांड्रचीनकान् १९ वत्सान्कलिंगांस्तरलानश्मका ऋ
षिकानपि जित्वैतान्समरे वीरश्चक्रे बलिभृतः पुरा २० शरव्रातैः सुनिशितैः स्तंभैः कंकपत्रिभिः दुर्योधनस्य वृद्ध्यर्थं राधेयो रथिनां वरः २१ दि
व्यास्त्रविन्महातेजाः कर्णो वैकर्त्तनो वृषः सेनागोपाश्च स कथं शत्रुभिः परमास्त्रवित् ॥ ॥ ॥ ॥ ॥

शकान्त

जलवर्षिलाहृवेषुमहेंद्रोहृषः धनवर्षिलान्मनुष्येषुकर्णोहृषः नतोयंएवममिनः वृषिकर्त्तारिहृषं २४ अजितइतिछेदः योजितोनियोजितोमयेतिवा २५ यमितिमागधोप्यस्यैववले

घातितः पांडवैः शूरैः समरेवीर्यशालिभिः वृषोमहेंद्रोदेवेषुवृषःकर्णोनरेषुपि २३ ततीयमन्यंलोकेषुवृषंनैवानुशुश्रुमः उच्चैः श्रवावरोश्वानां राज्ञांवैश्रवणोवरः २४ वरोमहेंद्रोदेवानांकर्णः प्रहरतांवरः योजितः पार्थिवैः शूरैः समर्थैर्वीर्यशालिभिः दुर्योधनस्यहृध्यर्थंकृत्स्नामुर्वीम मघाजयत यंलब्ध्वामागधोराजासांत्वमानोयसौत्हृदैः २५ अरौत्सीत्पार्थिवंक्षत्रमनेयादवकौरवान् तंश्रुत्वानिहतंकर्णंद्वैरथेसव्यसाचिना २६ शोकार्णवेनिमग्नोहंनिस्तानौरिवसागरे तंहृषंनिहतंश्रुत्वाद्वैरथेरथिनांवरः २७ शोकार्णवेनिमग्नोहमप्लवः सागरेयथा ईदृशैर्यदि हं दुःखैर्नविनश्यामिसंजय २८ वज्राद्दृढतरंमन्येहृदयंममदुर्भिदं ज्ञातिसंबंधिमित्राणामिमंश्रुत्वापराभवं २९ कोमदन्यः पुमांल्लोकेनजह्यात्सूतजीवितं विषमग्निंप्रपातंचपर्वताग्रादहंवृणे ३० नहिशक्ष्यामिदुःखानिसोढुंकष्टानिसंजय ३१ इतिश्रीमहाभारतेकर्णपर्वणिधृतराष्ट्रवाक्यं संजयउवाच श्रियाकुलेनयशसातपसाचश्रुतेनच त्वामद्यसंतोमन्यंतेययातिमिवनाहुषं १ श्रुतेमहर्षिप्रतिमः कृतकृत्योसिपार्थिव प र्यवस्थापयात्मानंमाविषादेमनः कृथाः २ ॥ ॥ ॥ ॥ ॥

नवलकानितिमाव: ३० १ २ श्रीरामचंद्रजीसहाय॥ ॥ ॥ ॥ ॥ ५ ॥

कं०
२३

प्र १
वि[illegible]वः नोकाहीत. ११ दुःखात् भीष्मद्रोणवधजात् दुःखं व्यसनं च नदुमयं दुःखं कर्णवधजं व्यसनं शोकनाशनं १२ तदेवाहमीक्षेत्यादिना १३ पार्थपाखंदं नौकप्रवानीयं

धृतरा[illegible]ष्ट्र उवाच दैवमेव परं मन्ये धिक् पौरुषमनर्थकं यत्र शालप्रतीकाशः कर्णोऽहन्यत संयुगे ३ हत्वा युधिष्ठिरानीकं पंचालानां रथव्रजान प्र
ताप्य शरवर्षेण दिशः सर्वा महारथः ४ मोहयित्वा रणे पार्थान्वज्रहस्त इवासुरान् स कथं निहतः शेते वायुरुग्ण इव द्रुमः ५ शोकस्यांतं न पश्यामि
पारं जलनि[illegible]धेरिव चिंता मे वर्धते तीव्रा मुमूर्षा चापि जायते ६ कर्णस्य निधनं श्रुत्वा विजयं [illegible]फाल्गुनस्य च अश्रद्धेयमहं मन्ये वधं कर्णस्य संजय ७
वज्रसारमयं नूनं हृदयं सुदृढं मम यच्छ्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्यते ८ आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा यत्र कर्णं हतं श्रुत्वा जीवामीह
सुदुःखितः ९ धिग्जीवितमिदं चैव सुहृद्धीनस्य संजय अद्य चाहं दशामेतां गतः संजय गर्हितां १० कृपणं वर्तयिष्यामि शोच्यः सर्वस्य मंद
धीः अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः ११ परिभूतः कथं सूत परैः शक्ष्यामि जीवितुं दुःखात्सुदुःखं व्यसनं प्राप्तवानस्मि संजय १२ भी
ष्मद्रोणवधे चैव कर्णस्य च महात्मनः नावशेषं प्रपश्यामि सूतपुत्रे हते युधि १३ स हि पारं महानासीत्पुत्राणां मम संजय युद्धे हि निहतः शूरो विसृ
[illegible]जन्सायकान्बहून १४

एम०
२३

प्रतिमानं ध्वजन्मतं १८ यथायं गोरव्यागमनं दुर्धर्षमेवं दुर्योधनस्याकूतमभिप्रायो दुर्धर्षः तर्षितस्य विप्रुषो जलविंदवो यथातस्योपशमायन भवंतितस्य दुर्योधनचेष्टितमपीष्टसिध्यर्थे नपर्याप्त

नः २

को हि मे जीवितेनार्थस्तमृते पुरुषर्षभं रथाद्रथिरथिर्न्हतं नत्र पतत्नायकार्दितः १५ पर्वतस्येव शिखरं वज्रपाताद्विदारितं सशेते पृथिवीं न्हत्वे शोभयन

रुधिरोक्षितः १६ मातंगस्येव मत्तेन द्वियेंद्रेण निपातितः यो बलं धार्तराष्ट्राणां पांडवानां यतो भयं १७ सोर्जुनेन हतः कर्णः प्रतिमानं धनुष्मतां सव्येषी

रो महेष्वासो मित्राणां अभयंकरः १८ शेते विनिहतो वीरो देवेंद्रेणाद्रिवाचलः पं गोरिवाव्यागमनं दरिद्रस्येव कामितं दुर्योधनस्य चाकूतं तृषितस्येव

विप्रुषः अन्यथा चिंतितं कार्यमन्यथा तत्तु जायते १० अहो नु बलवद्दैवं कालश्च दुरतिक्रमः पलायमानः कृपणो दीनात्मा दीनपौरुषः २१ कच्चि

द्धि निहतः सूतपुत्रो दुःशासनो मम कच्चिद्दीनाचरितं कृतवांस्तात संयुगे २२ कच्चिन्न निहतः [illegible]

[illegible] क्षत्रोपयाम्ये क्षत्रियर्षभाः युधिष्ठिरस्य वचनं मा पुष्यलेति सर्वदा २३ दुर्योधनो नाम्मपगल्लाम्मद्रोमि वौषधं शरतल्पे शयानेन भीष्मेणा महा

त्मना २४ पानीयं याचितः पार्थः सोविध्यन्मेदिनीतलं जलस्य धारां जनितां दृष्ट्वा पांडुसुतेन च २५ अब्रवीत्तं महाबाहुस्तात संशाम्य पांडवैः प्र

शमाद्धि भवेच्छांतिर्मृदं तं युद्धमस्तु वः २६ ॥ ॥ पष्प २

मिमर्थः १९ हीनपौरुषः नष्टपराक्रमः २१ अनेकृतः २६ २९

२८ नाम्यमानाः नाडयंतः ३१ अप्रतिपध्यंतं शिखंडिना प्रतिपद्यमनं गीकुर्वीणां ३२ ३७ ३८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भ्रातृभावेन पृथिवीं भुंक्ष्व पांडुसुतैः सह अकुर्वंश्च वचनं तस्य नूनं शोचति पुत्रकः २७ तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः अहं तु निहतामात्यो हतपु
त्रश्च संजय २८ द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः यथा हि शकुनिं गृह्य छित्वा पक्षौ च संजय २९ विसर्जयंति संहृष्टाः क्रीडमानाः कुमारकाः
लूनपक्षतया तस्य गमनं नोपपद्यते ३० तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः क्षीणः सर्वार्थहीनश्च निर्ज्ञातिर्बंधुवर्जितः ३१ कां दिशं प्रतिपत्स्या
मि दीनः शत्रुवशं गतः ३२ इति श्रीमहाभारते कर्णपर्वणि वैशं० इत्येवं धृतराष्ट्रोथ विलप्य बहु दुःखितः प्रोवाच संजयं भूयः शोकव्याकुलमानसः
३३ धृतराष्ट्र उवाच योजयत्सर्वकांबोजानंबष्ठान्कैकयैः सह गांधारांश्च विदेहांश्च जित्वा कार्यार्थमाहवे ३४ दुर्योधनस्य वृध्यर्थं योजयत्पृथिवीप्र
भुः स जितः पांडवैः शूरैः समरे बाहुशालिभिः ३५ तस्मिन्हते महेष्वासे कर्णे युधि किरीटिना के वीराः पर्यतिष्ठंत तन्ममाचक्ष्व संजय ३६ कच्चिन्नैकः
परित्यक्तः पांडवैर्निहतो रणे उक्तं त्वया पुरा तात यथा वीरो निपातितः ३७ भीष्ममप्रतिपुध्यंतं शिखंडी सायकोत्तमैः पातयामास समरे सर्वशस्त्रभृतां वरं ३८

स१

द्रौपदिनाद्रुपदपुत्रेणधृष्टद्युम्नेन ३९ कुंडलाभ्यांसकवचाभ्यामर्थेनाहर्थ्येवतर्थी ४३ अवमन्येत्वमवमेने ४९ ॥ ॥ ॥ ॥ ॥ ॥ ८

तथाद्रौपदिनाद्रोणोमत्तसर्वायुधोयुधि युक्तयोगोमहेष्वासः शरैर्विद्धुभिराचितः १ ३९ निहतःखड्गमुद्यम्यधृष्टद्युम्नेनसंजय त्वंतरेणाहतावेतौछले
नचविशेषतः ४० अश्वत्थामहमेतद्धिभीष्मद्रोणौनिपातितौ भीष्मद्रोणौहिसमरेनहन्याद्वज्रभृत्स्वयं ४१ न्यायेनयुध्यमानोहितद्धिसत्यंब्रवीमिते कर्णोत्वसं
तमस्त्राणिदिव्यानिचबहूनिच ४२ कथमिंद्रीयमंवीरंमर्त्युर्युद्धेसमस्पृशत् यस्यविद्युत्प्रभांशक्तिंदिव्यांकनकभूषणां ४३ प्रायच्छद्द्विषतांहंत्रीकुंडलाभ्यां
पुरंदरः यस्यसर्पमुखोदिव्यः शरः कांचनभूषणः अशेतनिहतः पत्रीचंदनेष्विरिसूदनः भीष्मद्रोणमुखान्वीरान्योवमन्यमहारथान् ४४ जामदग्न्या
न्महाघोरंब्राह्ममस्त्रमशिक्षत यश्चद्रोणमुखान्दृष्ट्वाविमुखान्नर्दितान्शरैः ४५ सौभद्रस्यमहाबाहुर्व्यधमत्कार्मुकंशितैः यश्चनागायुतप्राणंवज्र
रंहसमच्युतं ४६ विरथंभ्रातरंकृत्वाभीमसेनमथाहसत् सहदेवंचनिर्जित्यशरैः संनतपर्वभिः ४७ कृपयाविरथंकृत्वानाहनद्धर्मवित्तया यश्चमायास
हस्राणिविकुर्वाणंजयैषिणां ४८ घटोत्कचंराक्षसेंद्रंशक्त्यानिजघ्निवान् एतानिचदिवसान्यस्ययुद्धेभीतोधनंजयः ४९ ॥ ॥ ॥

क०
१५

रथेतिरथभंगाद्यभावेतस्यमृत्युर्नभवेदितिभावः ५० ५१ ५२ ५३ ५४ ६० ६१

नागमहैरथंवीरःसंकथंनिहतोरणे रथभंगोनचेत्तस्यधनुर्वानव्यशीर्यत ५० नचेदस्त्राणिनिर्णेशुःसकथंनिहतःपरैः कोहिशक्तोरणेकर्णंविधुन्वानंम
हे[illegible]द्धनुः ५१ विमुंचंतंशरान्घोरान्दिव्यान्यस्त्राणिचाहवे जेतुंपुरुषशार्दूलंशार्दूलमिववेगिनं ५२ ध्रुवंतस्यधनुश्छिन्नंरथोवापिमहींगतः अस्त्रा
णिवाप्रणष्टानियथाशंससिमेहतं ५३ नत्वन्यदपिपश्यामिकारणंतस्यनाशने नहन्मिफाल्गुनंयावत्तावत्पादौनधावये ५४ इतियस्यमहाघोरंव्रतमा
सन्महात्मनः यस्यभीतोरणेनिद्रांधर्मराजोयुधिष्ठिरः ५५ त्रयोदशसमानिद्रांनाभजत्पुरुषर्षभः यस्यवीर्यवतोवीर्यमुपाश्रित्यमहात्मनः ५६ ममपुत्र
ः सभांभार्यांपांडूनांनीतवान्बलात् तत्रापिचसभामध्ये पांडवानांचपश्यतां ५७ दासभार्येतिपांचालीमब्रवीत्कुरुसंनिधौ नसंतिपतयःकृष्णे
सर्वेषंढतिलैःसमाः ५८ उपतिष्ठस्वभर्तारमन्यंवावरवर्णिनी इत्येवंयःपुरावाचोरूक्षाःसंश्रावयत्रुषा ५९ सभायांसूतजःकृष्णांसकथंनिहतःप
रैः यदिभीष्मोरणश्लाघीद्रोणोवायुधिदुर्मदः ६० नहनिष्यतिकौंतेयानल्पयत्नात्सुयोधन सर्वानेवहनिष्यामिव्येतुतेमानसोज्वरः ६१ ॥

नि २

राम०
१५

६५ प्रतीपंयातिभिः नैरभिधावद्भिः सर्वदिग्भ्यः समागतैः ६६ आधिरथेः अधिरथपुत्रस्य सोमदत्तप्रसाहवयोनयकर्येराभानीनियोगात्प्रभोवद्भिः तेषां त्रयाणां मंत्रुभिः मयूखैः ६०

म१ स२

।किंकरिष्यतिगांडीवंकृष्णोवमहेषुधी क्लिष्टवृंदनदिग्धस्यममछरस्याभिधावतः ६२ सत्नूनमद्यमरकंवोत्यर्जुनेनकथंहतः यस्त्वगां
डीवमुक्तानांस्पर्शमुग्रमचिंतयन् ६३ अपतितंसिकस्मेतिब्रुवन्यार्यानवेक्षत यस्यनासीद्भयंपार्थैः सपुत्रैःजनार्दनैः ६४ स्व
बाहुबलमाश्रित्यमुहूर्तेनपिसंजय तस्यनाहंवधंमन्येदेवैरपिसवासवैः ६५ प्रतीपमभिधावद्भिः किंपुनस्तातपांडवैः नहिज्यासंस्प
शानस्यतलत्रेवापिरक्षतः ६६ पुमानाधिरथेःस्थातुंकश्चित्प्रमुखतोर्हति ॥ अपिस्यात्मेदिनीहीनासोमसूर्यप्रभांशुभिः ६७ नवधः
:पुरुषेंद्रस्यसंयुगेष्वपलायिनः येनमंदः सहायेनभ्रात्रादुःशासनेनच ६८ वासुदेवमतेबुद्धिः प्रत्याख्यानमरोचत सनूनंवृषभ
नि३ स्कंधंकर्णंदृष्ट्वानिपातितं ६९ दुःशासनंचनिहतंमन्येशोचतिपुत्रकः हतंवैकर्तनंश्रुत्वाद्वैरथेसव्यसाचिना ७० जयतःपांडवान्दृ
ष्ट्वाकिंचिद्दुर्योधनोब्रवीत् दुर्मर्षणंहतंदृष्ट्वावृषसेनंचसंयुगे ७१ प्रभग्नंचबलंदृष्ट्वावध्यमानंमहारथैः पराङ्मुखांश्चराज्ञस्तुपला
यनपरायणान् ७२ ॥ ॥ ॥ ॥ ॥ ॥

मंदोदुर्योधनः ७० प्राङ्मुखानितिपाठेनिवर्तितमुखाः प्राक्प्रमुखाः कौरवाः यदिपलायंतेतदाप्राङ्मुखाएवभवंतीत्यर्थः ७२ ॥ ४ ॥ ॥

अनेयः अशिक्षणीयः यतोभिमानी विद्वत्वाभिमानी अत एव दुर्बुद्धिः हितमजानन् १७४ प्रथनेरणे ७९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विदुतान्रथिनोदृष्ट्वामन्येशोचतिपुत्रकः अनेयश्चाभिमानीचदुर्बुद्धिर्जितेंद्रियः ७३ हतोत्साहंबलंदृष्ट्वाकिंस्विद्दुर्योधनोब्रवीत् स्वयंवै
रंमहत्कृत्वाचार्यमाणाः सदूतमैः ७४ प्रधानैर्हतभूयिष्ठैः किंस्विद्दुर्योधनोब्रवीत् भ्रातरंनिहतंदृष्ट्वाभीमसेनेनसंयुगे ७५ रुधि
रेपीयमानेचकिंस्विद्दुर्योधनोब्रवीत् सहगांधारराजेनसभायांयदभाषत ७६ कर्णोर्जुनेरणेहंताहतेतस्मिन्किमब्रवीत् द्यूतं
कृत्वापुराहृष्टोवंचयित्वाचपांडवान् ७७ शकुनिःसौबलस्तातहतेकर्णेकिमब्रवीत् कृतवर्मामहेष्वासः सात्वतानांमहारथः
७८ हतेवैकर्तनेदृष्ट्वाहार्दिक्यः किमभाषत ब्राह्मणाः क्षत्रियावैश्यायस्यशिक्षामुपासते ७९ धनुर्वेदंचविकांक्षंतोद्रोणपु
णपुत्रस्यधीमतः युवारूपेणसंपन्नोदर्शनीयोमहायशाः ८० अश्वत्थामाहतेकर्णेकिमभाषतसंजय आचार्योयोधनुर्वेदे
गौतमोरथसत्तमः ८१ कृपः शारद्वतस्तातहतेकर्णेकिमब्रवीत् मद्रराजोमहेष्वासः शल्यः समितिशोभनः ८२ दृष्ट्वाविनिह
तेकर्णेसारथ्येरथिनांवरः किमभाषतसौवीरोमद्राणामधिपोबली ६५ ॥ ॥ ॥ ॥ ॥

